# संस्कृत-श्रुतबोधः।

## अवतरणिका।

महाकविकालिदासकृतित्वेन प्रसिद्धः श्रुतबोधोनाम छन्दोग्रन्थ आदिमरसोद्दीपनसम्बोधनपदबाहुल्यान्न बालानां सम्यगध्ययनोपयोगित्वमर्हतीति तत्संस्करणमावश्यकम्मन्यमानैरस्माभिस्तत्र प्रवृत्तिः कृता। संस्करणञ्च सम्बोधनपदमात्राणामुपकल्पितम्। प्रकृतग्रन्थसम्बोध्याया युवत्याः स्थले ससागरधराधीशो विक्रमादित्योऽभिषिक्त इत्यर्थः। तथा सम्बोधनपदविपरिणामेनापरिहार्य्यतया क्वचिदपि ग्रन्थापरावयवानाञ्च परिवर्त्तनं कृतम्।

सत्यं कालिदासस्योपरि लेखनीसञ्चालनेन न केवलमतिसाहसिकयमस्माकं प्रकाश्यते, यावत् ग्रन्थसौन्दर्य्यहानिरपि, तथापि तादृशादिमरसबाहुल्यसम्बोधनपदपरिहारेण बालविद्यार्थिनां तदध्यापकानाञ्च महानुपकारो भविष्यतीत्यत्र प्रवृत्ताः स्मः।

किञ्च श्रुतबोधस्यातिसंक्षिप्तावयवतया छन्दःशास्त्रीयावश्यज्ञातव्याः परिभाषादयो नात्र समुल्लिखिताः, तेन हि श्रुतबोधोक्तच्छन्दस्स्वपि बालानां न सम्यगभिज्ञा वर्त्ततेऽतस्तानप्यत्र निवेशयामः

संस्कृतसाहित्यं हि गद्यपद्यमयत्वाद्द्विविधं। तत्र गद्यं नाम वृत्तबन्धोज्झितं वाक्यम्। पद्यं चतुष्पदी, सापि द्विविधा—वृत्तं

जातिश्च। वर्णसंख्यातं वृत्तम्, मात्रासंख्याता जातिः। * वृत्तमपि त्रिविधं सममर्द्धसमं विषमञ्च। तेषां लक्षणानि यथा वृत्तरत्नाकरे।

"अङ्घ्रयो यस्य चत्वारस्तुल्यलक्षणलक्षिताः।
तच्छन्दःशास्त्रतत्त्वज्ञाः समं वृत्तं प्रचक्षते॥
प्रथमाङ्घ्रिसमो यस्य तृतीयश्चरणो भवेत्।
द्वितीयस्तुर्य्यवद्वृत्तं तदर्द्धसममुच्यते॥
यस्य पादचतुष्केऽपि लक्ष्म भिन्नं परस्परम्।
तदाहुर्विषमं वृत्तं छन्दःशास्त्रविशारदाः॥" इति

---

* छन्दःशास्त्रेषु त्रिवर्णात्मका अष्टौ गणा विद्यन्ते। यथा—मः (त्रिगुरुवर्णात्मकः), यः (आदिलघुत्रिवर्णात्मकः), रः (मध्यलघुत्रिवर्णात्मकः), सः (अन्त्यगुरुत्रिवर्णात्मकः), तः (अन्त्यलघुत्रिवर्णात्मकः), जः (मध्यगुरुत्रिवर्णात्मकः), भः (आदिगुरुत्रिवर्णात्मकः), नः (त्रिलघुवर्णात्मकः), गः (एको गुरुवर्णः), लः (एको लघुवर्णः)। मकारादीनां रेखिकाकारो यथा—म = ऽ ऽ ऽ, य = । ऽ ऽ, र = ऽ । ऽ, स = । । ऽ, त = ऽ ऽ ।, ज = । ऽ ।, भ = ऽ । ।, न = । । ।, ग = ऽ, ल = ।. श्लोकाश्चतुष्पादा भवन्ति। तत्र प्रतिपादमादितोमकारादीनां प्रयोगाच्छुभाशुभफलनिर्णयो यथा "मोभूमिः श्रियमातनोति, य-जलं वृद्धिं, र-वह्निर्मृतं, सोवायुः परदेशदूरगमनं त-व्योमशून्यम् फलम्। जः-सूर्य्योभयमाददाति विपुलं भेन्दुर्यशोनिर्मलम्। नोनागश्च सुखप्रदः फलमिदं प्राहुर्गणानां वुधाः। मकारप्रयोगात् लक्ष्मीलाभः, यप्रयोगादभ्युदयलाभः, रप्रयोगात् मृत्युलाभः, सप्रयोगात् विदेशगतिः, तप्रयोगात् निस्फलता, राज्यलाभः इति केचित्, भप्रयोगात् कीर्त्तिलाभः, जप्रयोगात् भयं, रोगलाभ इति केचित्, नप्रयोगात् सुखं, स्वर्गलाभ इति केचित्। एषां देवता यथा, मगणस्य पृथिवी, यगणस्य वरुणः, रगणस्य अग्निः, सगणस्य वायुः, तगणस्याकाशः जगणस्य सूर्य्यः, भगणस्य चन्द्रः, नगणस्य सर्पः। ह्रस्वोवर्ण एक-

श्लोकस्य चतुर्थोंऽशः पादः'। सच समवृत्तेष्वेकाक्षरादारभ्य षड्‌विंशत्यक्षरपर्य्यन्तमेकैकाक्षरवर्द्धनेन सम्भवति। तेषाञ्चोक्थेत्यादि संज्ञा। *

जिह्वाया इष्टविश्रामस्थानं 'यतिः'; सा च विश्रामविरामाद्यैः पदैरभिधीयते।

अन्यशास्त्रेषु यथाऽब्ध्यादिशब्दाः चतुरादीनां वाचकाः, अत्रापि तथा। तथाहि चन्द्र १, मिथुन २, वह्नि ३, अब्धि = ४, भूत = ५, रस = ६, मुनि = ७, वसु = ८, ग्रह = ९; एवं पृथिवी १ शिवनेत्र = ३, वेद = ४, वाण = ५, इन्द्रिय = ५, ऋतु = ६, अश्व = ७, नाग = ८, पर्व्वत = ८, दिक् = १०, आदित्य = १२, इत्यादि। एषां पर्य्यायवाचका नामियमेव संख्या।

---

मात्रिकः, दीर्घोद्विमात्रिकः, जातिच्छन्दःसु चतुर्मात्रिका पञ्च गणा भवन्ति। १मः सर्व्वगुरुः ऽ ऽ, २यः आदिगुरुः ऽ । । ३र्यो मध्यगुरुः । ऽ ।, ४र्थोऽन्त्यगुरुः । । ऽ, ५ मश्चतुर्लघुः । । । ।,

* एकाक्षरावृत्तेः साधारणं नाम उक्था, द्व्यक्षराया अत्युक्था, त्र्यक्षराया मध्या, चतुरक्षरायाः प्रतिष्ठा, पञ्चाक्षरायाः सुप्रतिष्ठा, षडक्षराया गायत्री, सप्ताक्षराया उष्णिक्, अष्टाक्षराया अनुष्टुप्, नवाक्षराया बृहती, दशाक्षरायाः पंक्तिः, एकादशाक्षरायास्त्रिष्टुप्, द्वादशाक्षराया जगती, त्रयोदशाक्षराया अतिजगती, चतुर्द्दशाक्षरायाः शक्करी, पञ्चदशाक्षराया अतिशक्करी, षोड़शाक्षराया अष्टिः, सप्तदशाक्षराया अत्यष्टिः, अष्टादशाक्षराया धृतिः, ऊनविंशत्यक्षरायाः अतिधृतिः, विंशत्यक्षरायाः कृतिः, एकविंशत्यक्षरायाः प्रकृतिरित्यादि।

# ग्रन्थारम्भः ।

---

छन्दसां लक्षणं येन श्रुतमात्रेण बुध्यते ।
तदहं कथयिष्यामि श्रुतबोधमविस्तरम् ॥ १ ॥

संयुक्ताद्यं दीर्घं सानुस्वारं विसर्गसम्मिश्रम् ।
विज्ञेयमक्षरं गुरु पादान्तस्थं विकल्पेन ॥ २ ।

---

(१) नविद्यते विस्तरो विस्तृतिर्यस्मिन् स तं, श्रुतमात्रेण विनैव प्रस्तारादिविचारं, छन्दसामार्य्यानुष्टुबादीनां लक्षणं गुरुलघुवर्णमालाणां स्वरूपं ।

(२) संयुक्तस्य युक्तवर्णस्य आदिस्थितं (अक्षरम्) गुरु, दीर्घं द्विमात्रिकं, विसर्गसम्मिश्रं विसर्गसहितं । पादान्ते स्थितोगुरुरपि क्वचित् लघुः स्यात्, लघुरपि क्वचित् गुरुरिति । प्रकृति-संयुक्ताक्षरयोः पूर्व्वस्यापि विकल्पेन गुरुत्वं । पादान्तस्य विकल्पेन लघुत्वं यथा "अल्पव्ययेन सुन्दरि ग्राम्यजनो मिष्टमश्नाति ॥" प्रपूर्व्वस्य—"गृहीतप्रत्युद्गमनीयवस्त्रा" ; ह्रपूर्व्वस्य,— "प्रासनाभिह्रदमज्जनमाशु" । वाराणसीमुद्रितपुस्तकेऽतः परं "आदिमध्यावसानेषु भजसा यान्ति गौरवम् । य र ता लाघवं यान्ति, मनौ तु गुरुलाघवम्। भजसा भगण, जगण, सगणा यथाक्रमं, आदि-मध्य-अवसानेषु गौरवं यान्ति गुरुत्वं प्राप्नुवन्ति भः-आदिगुरुः, ज-मध्यगुरुः, सः अन्त्यगुरुः, तथा यरता यगण, रगणा, तगणा आदि मध्यावसानेषु लाघवं यान्ति, यः आदिलघुः रःमध्यलघुः, तः-अन्तलघुः मनौ तु मगण, नगणा तु यथाक्रमं गौरवं लाघवञ्च प्राप्नुतः त्रिगुरुर्मः, त्रिलघुश्च: न । श्लोकस्यास्य ग्रन्थेऽस्मिन्नास्त्यु पयोग इति न सर्व्वत्र समादर इति प्रतीयते ।

मात्रा-च्छन्दः—जातिः ।

यस्याः पादे प्रथमे द्वादश मात्रास्तथा तृतीयेऽपि ।
अष्टादश द्वितीये चतुर्थके पञ्चदश साऽऽर्य्या । ३ ॥

आर्य्यापूर्व्वार्द्धसमं द्वितीयमपि भवति यत्र चारुमते ।
छन्दोविदस्तदानीं गीतिंताममलभाव, भाषन्ते ॥ ४ ।

आर्य्योत्तरार्द्धतुल्यं प्रथमार्द्धमपि प्रयुक्तञ्चेत् ।
भूमिप, तामुपगीतिं प्रकाशन्ते महाकवयः ॥ ५ ।

## समवृत्तानि ।

पञ्चाक्षरावृत्तिः ।

आदिचतुर्थं पञ्चमकं चेत् ।
यत्र गुरु स्यात् साऽक्षरपंक्तिः ॥ ६ ।

षड़क्षरावृत्तिः ।

अगुरु-चतुष्कं भवति गुरू द्वौ ।
सुविमलकीर्त्ते ! शशिवदनाऽसौ ॥ ७ ।

---

(३) आर्य्यायाः प्रथमार्द्धे त्रिंशन्मात्राः, द्वितीयार्द्धे तु सप्तदश मात्राः—इत्येव निष्कर्षः ।

(४) चारुमते अमलभाव इति पदद्वयं राज्ञः सम्बोधनपरम् । अत्र चारुमते इत्यत्र हंसगते, अमलभावेत्यत्र अमृतवाणि इति मूलपाठः ।

(५) भूमिप-इति राज्ञः सम्बोधनपदम् । भूमिपेत्यत्र कामिनि इति मूलपाठः ।

(६) भगौग्=ऽ।।, ऽ, ऽ, अन्यत्र पंक्तिरिति नाम ।

(७) शशिवदना न्यौ—न य= ।।।, ।ऽऽ, सुविमलकीर्त्ते इति राज्ञः सम्बोधनपदं, सुविमला कीर्त्तिर्यस्य तत्सम्बोधने । घन कुचयुग्मे शशिवदनासौ इति मूलपाठः ।

सप्ताक्षरावृत्तिः ।

तुर्य्यं पञ्चमकं चेद् यत्र स्याल्लघु सैषा ।
विद्वद्भिर्वरवीर प्रोक्तास्मिन्मदलेखा ॥ ८ ।

अष्टाक्षरा वृत्तिः ।

पञ्चमं लघु सर्व्वत्र सप्तमं द्विचतुर्थयोः ।
षष्ठं गुरु विजानीयादेतत् पद्यस्य लक्षणम् ॥ ९ ।
श्लोके षष्ठं गुरु ज्ञेयं सर्व्वत्र लघु पञ्चमम् ।
द्विचतुःपादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोः ॥ १० ।
आदिगतं तुर्य्यगतं पञ्चमकञ्चान्त्यगतम् ।
स्याद्गुरु चेत्तत् कथितं माणवकक्रीड़मिदम् ॥ ११ ।
द्वितुर्य्य षष्ठमष्टमं गुरु प्रयोजितं यदा ।
तदा निवेदयन्ति तां बुधा नगस्वरूपिणीम् ॥ १२ ।
सर्व्वे वर्णा दीर्घा यस्यां विश्रामः स्याद्वेदैर्वेदैः ।
विद्वद्वृन्दैर्भूमीपाल ! व्याख्याता सा विद्युन्माला ॥१३ ।

---

(८) वरवीर इति राज्ञः सम्बोधनपदं । मसग् = ऽऽऽ, ।।ऽ, ऽ सैषा इत्यत्र बाले इति, वरवीर इत्यत्र मृगनेत्रे इति मूलपाठः, प्रोक्ता सा मदलेखेति क्वचित् पाठः ।

(९) (१०) एतौ हि श्लोकौ, अनुष्टुबिति प्रसिद्धौ ।

(१२) अन्यत्र प्रमाणिकेति नाम, जरौ लगौ =।ऽ।, ऽ।ऽ, । ऽ, लगस्थितिर्निरन्तरा ।

(१३) मो मो गो गो विद्युन्माला = ऽऽऽ, ऽऽऽ, ऽ, ऽ, भूमीपाल इति राज्ञः सम्बोधनपदं । चतुर्थेऽष्टमे चाक्षरे यतिः (वेद = ४) । भूमिपालेत्यत्र वीणावाणि इति मूलम् ।

नवाक्षरावृत्तिः ।

आदितुरीयं पञ्चमकं षष्ठमथान्त्यं स्याद्गुरु चेत् ।
इन्द्रियवेदैश्चेद्विरतिस्तन्मणिबन्धं प्राह फणी ॥ १४ ।

दशाक्षरावृत्तिः ।

भूप, गुरु स्यादाद्यचतुर्थं पञ्चमषष्ठं चान्त्यमुपान्त्यम् ।
इन्द्रियबाणैर्यत्र विरामः सा कथनीया चम्पकमाला ॥१५।
दीर्घा वर्णाः प्रथमनिहिताश्चत्वारश्चेदथ तु लघवः ।
पञ्चान्त्यः स्याद्गुरुरपि युगैः ख्याता हंसी यतिरिह रसैः ॥१६॥

---

(१४) मूलश्रुतबोधग्रन्थे प्रथमं दशाक्षरां चम्पकमालामुक्त्वा पश्चात् "चम्पकमाला यत्र भवेदन्त्यविहीना प्रेमनिधे। छन्दसि दक्षा ये कवयस्तन्मणिबन्धं ते ब्रुवते" इति मणिबन्धस्य लक्षणं कृतं तदतीवसन्दर्भविरुद्धमिति मणिबन्धस्य प्राचीनलक्षणमत्रोदाहृतम्। भमसाः = ऽ।।, ऽऽऽ, ।।ऽ पञ्चमे नवमे चाक्षरे यतिः (इन्द्रिय = ५) ।

(१५) अन्यत्र रुक्मवतीति नाम, भमसगाः = ऽ।।, ऽऽऽ, ।।ऽ, ऽ, भूप इति राज्ञः सम्बोधनपदम्। पञ्चमे दशमे चाक्षरे यतिः (बाण = ५)। तन्त्रि गुरुस्यादिति मूलं शेषं तुल्यम् ।

(१६) मूलश्रुतबोधग्रन्थे हंसीवृत्तस्य लक्षणं मन्दाक्रान्तासंघटितत्वादतीवकठिनमासीदतोऽस्माभिः परिवर्त्तितम्। एतदर्थस्तु यत्र प्रथमं चत्वारो दीर्घा वर्णा निहिताः, तदनु पञ्च लघवः तथान्त्यो गुरुश्च स्यात् तथा युगैश्चतुर्भिरक्षरैरसैः षड्भिश्च यतिः सा। इह (शास्त्रे) हंसी इति ख्याता। मभनगाः = ऽऽऽ, ऽ।।, ।।।, ऽ, मूलश्रुतबोधलक्षणन्तु 'मन्दाक्रान्तान्त्ययतिरहिता सालङ्कारे भवति यदि सा तद्विद्वद्भिर्ध्रुवमभिहिता ज्ञेया हंसी कमलवदने ॥"

एकादशाक्षरा वृत्तिः ।

ह्रस्वो वर्णो जायते यत्र षष्ठो
प्रख्यातौजस्तद्वदेवाष्टमान्त्यः ।
विश्रामः स्याद्वीर ! वेदैस्तुरङ्गै-
श्छन्दोविद्भिः प्रोच्यते शालिनीयम् ॥ १७ ॥

आद्यचतुर्थमहीनसुकीर्त्ते,
सप्तमकं दशमञ्च तथान्त्यम् ।
सर्व्वधरेश्वर यत्र गुरु स्यात्
तत् कथितं ननु दोधकवृत्तम् ॥ १८ ॥

यस्यां त्रिषट्सप्तममक्षरं स्याद्
ह्रस्वं सुमेधो ! नवमञ्च तद्वत् ।
कीर्त्त्या विलक्षीकृतहंसकान्ते !
तामिन्द्रवज्रां ब्रुवते मुनीन्द्राः ॥ १९ ॥

---

(१७) प्रख्यातौजः, वीर इति राज्ञः सम्बोधनपदद्वयं, छन्दोविद्भिरियं शालिनी प्रोच्यते इत्यन्वयः। चतुर्थे एकादशे च यतिः (तुरङ्ग=७)। म त त ग गाः=ऽ ऽ ऽ, ऽ ऽ ।, ऽ ऽ ।, ऽ, ऽ, ; ह्रस्वो वर्णो जायते यत्र षष्ठः, कम्बुग्रीवे तद्वदेवाष्टमान्त्यः। विश्रामः स्यात्त न्वि वेदैस्तुरङ्गैस्तां भाषन्ते शालिनीं छान्दसीया इति मूलम्।

(१८)। अहीनसुकीर्त्ते इति राज्ञः सम्बोधनपदं, अहीन (अनन्त इव शोभना कीर्त्तिर्यस्य सः। सर्व्वस्या धराया ईश्वर सम्बोधनपदं। भ भ भ ग गाः=ऽ ।।, ऽ ।।, ऽ, ।। ऽ, ऽ, ऽ, दोधकमिच्छति भत्रितयाद्गौ। आद्यचतुर्थमहीननितम्बे सप्तमकं दशमञ्च तथान्त्यम्। यत्र गुरु प्रकट स्मरसारे इति मूलं शेषं तुल्यम।

(१९) कीर्त्त्या विलक्षीकृता मलिनीकृता हंसकान्तिर्येन। पदमेतत् राज्ञः सम्बोधनपदं। तौ जगौ गः = ऽ ऽ ।, ऽ ऽ, ।, । ऽ, ऽ, ऽ, सुमेध इत्यत्र सुजङ्घे इति कीर्त्त्या इत्यत्र गत्या इति मूलम्।

यदीन्द्रवज्राचरणेषु पूर्व्वे
भवन्ति वर्णा लघवः सुकान्ते ! ।
सुमङ्गलाभ्यामरते ! तदानी-
मुपेन्द्रवज्रा कथिता कवीन्द्रैः ॥ २० ॥

उपजातिः ।

यत्र द्वयोरप्यनयोस्तु पादा
भवन्ति चास्याब्जजितेन्दुकान्ते ! ।
विद्वद्भिरार्य्यैः परिकीर्त्तिता सा
प्रयुज्यतामित्युपजातिरेषा ॥ २१ ॥
आख्यानकी स्यात् सदयार्थिमार्थे !
यदीन्द्रवज्राचरणः पुरा स्यात् ।
उपेन्द्रवज्राचरणास्त्रयोऽन्ये
मनोषिणोक्ता विपरीतपूर्व्वा ॥ २२ ॥

---

(२०) शोभना कान्तिर्यस्य स सुकान्तिः सुमङ्गलाभ्यामि रति-र्यस्य सः । पदद्वयं राज्ञः सम्बोधनपरं । ज त ज ग गाः = । ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ, ऽ, सुकान्ते इतात्रसुवर्णे इति, अमङ्गलाभ्यामरते इतात्र अमन्थमाथ्यन्सदने इति च मूलम ।

(२१) आस्याब्जेन मुखपद्मेन जिता इन्दोश्चन्द्रस्य कान्तिर्येन तत् सम्बुद्धौ । अत्र भवन्ति सीमन्तिनि चन्द्रकान्ते इति मूलं शेषं तुल्यम् ।

(२२) उपजातिविशेषा नान्यत्र गणिताः । हे अर्थिमार्थे सदय। प्रकटीकृतार्थे इति मूलं । शेषं तुल्यं । आख्यानकीति क्वचित् पाठः । पुरस्तादिति क्वचित् ।

आद्यमक्षरमतस्तृतीयकं
सप्तमञ्च नवमं तथान्तिमम् ।
दीर्घमिन्द्रसम यत्र जायते
तां वदन्ति कवयोरथोद्धताम् ॥ २३ ।
अक्षरञ्च नवमं दशमञ्चे
द्यत्ययाद्भवति यत्र सुनीते ।।
सर्व्वभूधरचूड़ार्च्चितपाद,
स्वागतेति कविभिः कथिताऽसौ ॥ २४ ।

द्वादशाक्षरावृत्तिः ।

सतृतीयकषष्ठमरुद्धगते !
नवमं विरतिप्रभवं गुरु चेत् ।
बुधदेवगुरूपमतीक्ष्णमते !
ननु तोटकवृत्तमिदं कथितम् ॥ २५ ।

---

(२३) इन्द्रसम राज्ञः सम्बोधनपदं। रात् परैर्नरलगैरथोद्धता = र न र ल गाः = ऽ । ऽ ।।।, ऽ । ऽ, । ऽ इन्द्र समेत्यत्र इन्द्रमुखि इति मूलम् ।

(२४) धराधर, सुनीते (शोभना नीतिर्यस्य सः) इति राज्ञः सम्बोधनपदद्वयं। स्वागता रनभगैर्गुरुणा च = ऽ । ऽ ।।।, ऽ।।, ऽ, ऽ सुनीते इत्यत्र विनीते इति मूलं, मूले तृतीय चरणस्त्वेवं पठितः "प्रोन्नमेणनयने यदि सेव । तत्र चेत् यदीत्येतयोः पुनरुक्तत्वम् ।

(२५) विरतिप्रभवं अन्त्याक्षरं ; अरुद्धा (शत्रुभिरप्रतिहता) गतिर्यस्य सः, बुधः सोमात्मजः, देवगुरुर्वृहस्पतिः तयोरिव तीक्ष्णा मतिर्यस्य सः पदद्वयं सम्बोधनपरं । तोटकमब्धिसकारयुतं = ।।ऽ, ।।ऽ,।। ऽ, ।।ऽ अरुद्धगते इत्यत्र अनङ्गरते इतिमूलं, तत्र तृतीयश्चरणः घनपीनपयोधर भारनते इति पठितः भारभृते क्वचित् पाठः ।

ह्रस्वो वर्णः स्यात् सप्तमो यत्र राजन् !
तद्वद्भूमीश ! न्यस्तएकादशाद्यः ।
बाणैर्विश्रामो यत्र चेद्वा तुरङ्गैः
नाम्ना निर्दिष्टा तत्र सा वैश्वदेवी ॥ २६ ।

यदाद्यं चतुर्थं तथा सप्तमञ्चेत्
तथैवाक्षरं ह्रस्वमेकादशाद्यम् ।
शरच्चन्द्रविद्वेषिवक्त्राब्जकान्ते !
तदुक्तं कवीन्द्रैर्भुजङ्गप्रयातम् ॥ २७ ।

यदि तोटकस्य गुरु पञ्चमकं
विहितं धराधर ! तदक्षरकम् ।
रससंख्यकं गुरु न चेदिह सा
प्रमिताक्षरेति कथिता कविभिः ॥ २८ ।

---

(२६) राजन् भूमीश सम्बोधनपदद्वयं। पञ्चमे द्वादशे वाक्षरे यतिः (वाणः = ५, तुरङ्ग = ७), म म य याः = ऽ ऽ ऽ, ऽ ऽ ऽ, । ऽ ऽ, । ऽ ऽ, राजन्नित्यत्र वाले इति मूलं, भूमीश इत्यत्र विम्बोष्ठीति मूलम्।

(२७) शरच्चन्द्रविद्वेषिवक्त्राब्जकान्ते [illegible] सम्बोधनपदमेतत्। एकादशाद्यं, एकादशस्यादिभूतम् दशममित्यर्थः। भुजङ्गप्रयातं चतुर्भिर्यकारैः = । ऽ ऽ, । ऽ ऽ, । ऽ ऽ, । ऽ ऽ, शरच्चन्द्रविद्वेषिवक्त्रारविन्दे इति मूलम्।

(२८) धराधर सम्बोधनपदं। स ज स साः = । । ऽ, । ऽ ।, । । ऽ । । ऽ, धराधरेत्यत्र विलासिनि इति मूलं, इह सेत्यत्र वलेति मूलम्।

ननु धरेश्वर यत्र चतुर्थकं
गुरु च सप्तमकं दशमन्तथा।
विरतिजञ्च तथैव विचक्षणै-
र्द्रुतविलम्बितमित्युपदिश्यते ॥ २९ ।

उपेन्द्रवज्राचरणेषु सन्ति चे-
दुपान्त्यवर्णा लघवः कृता यदि ।
तनुश्रिया निर्ज्जितकामकान्ते
वदन्ति वंशस्थमिदं तदा बुधाः ॥ ३० ।

यस्यां सशोकारिवधूकृतस्तुते
वंशस्थपादा गुरुपूर्व्ववर्णकाः ।
तारुण्यलक्ष्म्युल्लसितोरुकान्ते
तामिन्द्रवंशां कवयः प्रचक्षते ॥ ३१ ।

---

(२९) विचक्षणैः पण्डितैः। द्रुतविलम्बितमाह नभौ भरौ = । । ।, ऽ । ।, ऽ । ।, ऽ । ऽ. ननु धरेश्वरेत्यत्र 'अयि कृशोदरि इति मूलम्। मूले द्रुतविलम्बितं इत्यस्मादनन्तरं हरिणप्लुताछन्दः प्रदर्शितम्, तत्तु अर्द्धसमवृत्तमतः समवृत्तप्रसङ्गे तदुक्तिरनुचितेति परित्यक्त मत्रास्माभिः. प्रदर्शितञ्च तद्यथास्थानम्।

(३०) तनुश्रिया शरीरसौन्दर्य्येण जिता कामस्यकान्तिर्येन सः तत्सम्बोधनं। जतौ जरौ = । ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ । ऽ। तनुश्रियेत्यादौ सदोमदभ्रूजितकामकार्म्मुके इति मूलम्। तदा बुधाइत्यत्र बुधास्तदेति क्वचित् पाठः। तारुण्यलक्ष्मीर्यौवनश्रीस्तया उल्लसिता ऊरुसम्हतीकान्तिर्यस्य।

(३१) सशोका या अरिवध्वः ताभिः कृतास्तुतिर्यस्मै सः तत्सम्बो

त्रयोदशाक्षरावृत्तिः ।

यस्यामिह प्रथमकमक्षरद्वयं
तुर्य्यं तथा गुरु नवमं दशान्तिमम् ।
मान्त्यं भवेद् यदि विरतिर्युगग्रहै-
र्मा लक्ष्यताममलमते ! प्रभावती ॥ ३२ ।

आद्यं चेत् त्रितयमथाष्टमं दशान्त्यं
चोपान्त्यं गुरु नियतं सुभाषित ! स्यात् ।
विश्रामो भवति महेशनेत्रदिग्भि-
र्विज्ञेया ननु सुभग प्रहर्षिणी सा ॥ ३३ ।

चतुर्दशाक्षरावृत्तिः ।

आद्यं द्वितीयमपि चेद् गुरु तूर्य्यमेवं
यत्राष्टमञ्च दशमान्त्यमुपान्त्यमन्त्यम् ।

---

धनम् । ततो जरौ ऽ ऽ ।, ऽ ऽ ।, । ऽ ।, ऽ । ऽ, मशोकतरादौ अशोकाङ्कुरपाणिपल्लव इति मूलं तत्र तृतीय चरणस्तु, तारुण्यहेलारतिरङ्गलालसे इत्येवं पठितः ।

(३२) चतुर्थेऽन्तिमे च यतिः (युग = ४, ग्रह = ९) त भ स ज गाः = ऽ ऽ ।, ऽ । ।, । । ऽ, । ऽ ।, ऽ दशान्तिमं दशमेन सहितं अन्तिमं त्रयोदशवर्णं दशमञ्चान्तिमञ्चेति भावः । दशान्तिकमिति क्वचित् पाठः । अमलमते ! सम्बोधनपदम् । इहैतात्र प्रिये इति मूलं, अमलमते इति मूलम् । मा लक्षितेति क्वचित् पाठः ।

(३३) सुभाषित, नृपते इति सम्बोधनपदद्वयं । तृतीये अन्तिमे च यतिः (महेशनेत्र = ३, दिक् = १०) । म न ज र गाः = ऽ ऽ ऽ, । । ।, । ऽ ।, ऽ । ऽ, ऽ, दशान्त्यमितात्र नवान्त्यमिति मूलं तत्र च नवान्त्यमितानेन दशममानीतम् दशान्त्यमितास्यार्थस्तु दशमं अन्त्यञ्च ।

(३४) शोभनं यद्वृत्तमाचारस्तेन वर्द्धितं विस्तृतिं नीतं यद्यश-

सद्वृत्तवर्द्धितयशोजितचन्द्रकान्ते !
राजन् ! वसन्ततिलकां किल तां वदन्ति ॥२०।

पञ्चदशाक्षरावृत्तिः ।

प्रथममगुरु षट्कं विद्यते यत्र राजन् !
तदनु च दशमं चेदक्षरं द्वादशान्त्यम् ।
गिरिभिरथ तुरङ्गैर्यत्र च स्याद्विरामः
सुकविजनमनोज्ञा मालिनी सा प्रसिद्धा ॥३५।

सप्तदशाक्षरावृत्तिः ।

नृवर ! लघवः पञ्च प्राच्यास्ततोदशमान्तिम
स्तदनु नमिताराते ! वर्णौ यदि त्रिचतुर्दशौ ।
भवति च पुनर्यत्रोपान्त्यस्तदा धरणीपते !
यतिरपि रसैर्वेदैरश्वैः स्मृता हरिणीति सा ॥ ३६ ।

---

स्तेन जिता चन्द्रकान्तिर्येन सः तत्सम्बोधनं । तभजा जगौ गः= ऽऽ।, ऽ।।, ।ऽ।, ।ऽ।ऽऽ, सद्वृत्तवर्द्धितयश इतयत्र कामांकुशाङ्कुशितकाममतङ्गजेन्द्रे इति मूलं राजन्नितत्र कान्ते इति मूलम् ।

(३५) अष्टमेऽन्तिमे च यतिः (गिरि=८, तुरङ्ग=७) ननमययुतेयं मालिनी–।।।, ।।।, ऽऽऽ, ।ऽऽ, ।ऽऽ, राजन्नितत्र, यत्र च स्यादित्यत्र च कान्ते इति मूलं ।

(३६) हे नृवर ! हे नमिताराते ! (नमिता स्ववशीकृता अरातयो येन सः) हे धरणीपते ! इति सम्बोधनपदत्रयं । षष्ठे दशमेऽन्तिमे च यतिः (रस=६, वेद=४, अश्व=७)। न स म र स ल गाः=।।।, ।।ऽ, ऽऽऽ, ऽ।ऽ, ।।ऽ।, ऽ, नृवर इत्यत्र सुमुखीति मूलं दशमान्तिममित्र दशमान्तिकमिति क्वचित् पाठः। अर्थस्तूभयत्रैकादश एव। नमिताराते इत्यत्र ललितालापे इति मूलम्, तथा-धरणीपते इत्यत्र स्फुरत् करकङ्कणे इति मूलम् ।

यदा ह्रस्वः पूर्व्वः सुरुचिररुचे षष्ठकपरा-
स्ततो वर्णाः पञ्च प्रकृति सुकुमारप्ररचिताः ।
तृयोऽन्ये चोपान्त्या बुधगुणिजनैकप्रियसुहृत्
रसैरीशैर्यस्यां भवति विरतिः सा शिखरिणी ॥ ३७ ।
द्वितीयमचलापते ! यदि षड़ष्टमं द्वादशं
चतुर्द्दशमथ श्रुतं गुरुगभीरविद्यानिधे !
सपञ्चदशमान्त्यजं तदनु यत्र विश्रामको
गिरीन्द्रफणिभृत्कुलैर्भवति भूप पृथ्वी हि सा ॥ ३८ ।
चत्वारः प्राङ् नृवर ! गुरवो द्वौ दशैकादशौ चेत्
राजन् ! वर्णा तदनु कुमुदामोदकृत् । द्वादशान्त्यौ ।
तद्वच्चान्त्यौ युगरसहयै र्यत्र च स्याद्विरामः
मन्दाक्रान्तां प्रवरकवयः सौम्य तां सङ्गिरन्ति ॥ ३९ ।

---

(३७) हे सुरुचिररुचे सुरुचिरा रुचिः कान्तिर्यस्य सततसम्बोधनं प्रकृतिसुकुमार, हे बुधगुणिजनैकप्रियसुहृत् (बुधश्च गुणिजनाश्च तेषामद्वितीयः प्रियसुहृत्) इति सम्बोधनत्रयं । षष्ठेऽन्तिमे च यतिः (रसः = ६, ईशः = ७) रसैरुद्रैश्छिन्ना यमनसभला गः शिखरिणी = । ऽ ऽ, ऽ ऽ ऽ, । । ।, । । ऽ, ऽ । ।, ।, ऽ सुरुचिररुचे इतत्र कलितकमले इति मूलं प्रकृति सुकुमार इतत्र प्रकृति सुकुमारे इति मूलं वुधगुणिजनैतरादौ सुतनुजघनाभोगसुभगे इति मूलं रीशैरितत्र रुद्रैरिति क्वचित् पाठः ।

(३८) अचलापते अचला पृथ्वीतस्याः पतिः ! तत् सम्बोधनं गभीरविद्यानिधे भूप ! इति सम्बोधनत्रयं । अष्टमेऽन्तिमे च यतिः । (गिरीन्द्र = ८, फणिभृत्कुलं = ९) । जसौ ज स य ल गः = । ऽ ।, । । ऽ, । ऽ ।, ऽ ऽ ।, । ऽ ऽ, ।, ऽ, अचलापते इतत्र अलिकुन्तले इति मूलं गभीरविद्यानिधि इतत्र गभीरनाभिह्रदे इति मूलं, भूप इत्यत्र सुभ्रु इति मूलम् ।

(३९) राजन्, नृवर सौम्य इति सम्बोधनत्रयं, चतुर्थे, दशमे अन्तिमे च यतिः । (युग = ४, रस = ६, हय = ७) । म भ न त त

ऊनविंशत्यक्षरावृत्तिः ।

आद्याश्चेद्गुरवस्त्रयो नरपते ! षष्ठस्तथा चाष्टमः
सन्तोऽकादशतस्त्रयस्तदनु चेदष्टादशाद्यौ परौ ।
मार्त्तण्डैर्मुनिभिश्च यत्र विरतिः साम्भोधिपृथ्वीपते !
तद्वृत्तं प्रवदन्ति काव्यरसिका शार्दूलविक्रीड़ितम् ॥ ४० ।

एकविंशत्यक्षरावृत्तिः ।

चत्वारो यत्र वर्णाः प्रथमलघवः षष्ठकः सप्तमोऽपि
द्वौ तद्वत् षोड़शाद्यौ वररुचिरतनो ! षोड़षान्त्यान्तथान्त्या ।
आस्याभानिर्ज्जितेन्दो ! मुनिमुनिमुनिभिर्द्दश्यते यद्विरामो
राजन् ! वन्द्यैः कवीन्द्रैः सुचरित ! गदिता स्रग्धरेयं प्रसिद्धा॥४१।

---

ग गाः = ऽ ऽ ऽ, ऽ । ।, । । ।, ऽ ऽ ।, ऽ ऽ ।, ऽ, ऽ नृवरेतात्र सुतनु इति मूलं, राजन्नितात्र मुग्धे इति मूलं, कुमुदामोदकदितत्र कुमुदामोदिनीति मूलम्। सौम्येतत्र तन्वीति मूलम्। द्वादशैकादशौ चेदिति क्वचित् पाठः स तु न सम्यक् द्वादशस्य लघुत्व मत्. न च गुरूत्वम्।

(४०) नरपते ! साम्भोधिपृथ्वीपते ! (ससागरधराधिपते) इति सम्बोधनपदद्वयं। द्वादशेऽन्तिमे च यतिः। मः सजौ सततगाः = ऽ ऽ ऽ, । । ऽ, । ऽ ।, । । ऽ, ऽ ऽ ।, ऽ ऽ ।, ऽ, सन्तोत्र 'ननु' इति क्वचित् पाठः। सान्तोधि पृथ्वीपते इतत्रतु पूर्णेन्दुविम्बानने इति मूलम्।

(४१) आस्यस्य मुखस्य आभया कान्त्या निर्जित इन्दुर्येन सः ततसम्बोधनं; राजन् ! सुचरित ! इति सम्बोधनपदद्वयं। सप्तमे चतुर्द्दशेऽन्तिमे च यतिः (मुनिः = ७) म्रभ्नै र्यानां त्रयेण = ऽ ऽ ऽ, ऽ । ऽ, ऽ । ।, । । ।, । ऽ ऽ, । ऽ ऽ, । ऽ ऽ, वररुचिर तनो इतत्र मृदमदमृदिते इति मूलं, आस्याभा निर्ज्जितेन्दो इतत्रत्रभास्तम्भोरुकान्ते इति मूलं। राजन्नितत्र वाले इति मूलं, सुरुचिरगदितेतत्र सुतनुनिगदितेति मूलम्।

अर्द्धसमवृत्तम् ।

प्रथमाचरमाद्यतृतीययो-
र्द्रुतविलम्बितकस्य च पादयोः ।
अपि चेन्न तदा पृथिवीपते !
सुकविभिः कथिता हरिणप्लुता ॥ ४२ ।

इति संस्कृत-श्रुतबोधः ।

(४२) प्रथमार्द्धसमं यस्य तृतीयचरणं भवेत् । द्वितीयं तुर्य्यवत् वृत्तं तदर्द्धसममुच्यते ॥ विषमे सगणत्रितयं लगावथ समे नगणौ भगणौ च रः । विषमे प्रथम-तृतीयपादयोः, । । ऽ, । । ऽ, । । ऽ, । ऽ समे = द्वितीय-चतुर्थपादयोः—। । ।, ऽ । ।, ऽ । ।, ऽ । ऽ पृथिवीपते इतरत्र कमलेक्षणे इति मूलं। सुकविभिरित्यादौ भवति सुन्दरि सा हरिणप्लुतेति मूलम् ।

अर्द्धसमवृत्तेषु पुष्पिताग्रा-सुन्दरी-च्छन्दसी बहुधा व्यवह्रियेते न ज्ञायते कथं तयोर्लक्षणं न कृतम् । पुष्पिताग्रालक्षणं यथा "अयुजि नयुगरेफतोयकारो युजि तु नजौ जरगाश्च पुष्पिताग्रा" ॥ अयुजि प्रथम-तृतीय-पादयोः—।।।, ।।।, ऽ।ऽ, ।ऽऽ, युजि = द्वितीय-चतुर्थपादयोः ।।।, ।ऽ।, ।ऽ।, ऽ।ऽ, ऽ, उदाहरणं "अथ परिमलजामवाप्य लक्ष्मी-मवयवदीपितमण्डलश्रियस्ताः" भारविः। सुन्दरीलक्षणं "अयुजो र्यदि सौ जगौ युजोः सभराल्गौ । अयुजोः प्रथम-तृतीयपादयोः— ।।ऽ, ।।ऽ, ।ऽ।, ऽ, युजोः द्वितीय-चतुर्थ-पादयोः ।।ऽ, ऽ।।, ऽ।ऽ, ।ऽ, उदाहरणं "यदवोचदत वीक्ष्य मानिनी परितः स्नेहमयेन चक्षुषा" भारविः ।

# परिशिष्टम् ।

एकादशाक्षरावृत्तिः ।

संस्कृतकाव्येषु प्रायएकादशाक्षरवृत्तित आरभ्य समवृत्तान्त-र्गतानां छन्दसां व्यवहारोदृश्यते। एकादशाक्षरपादेषु च छन्दस्सु वक्ष्यमाणानामिव भूयान् व्यवहारः।

इन्द्रवज्रोपेन्द्रवज्रयोः शुद्धोदाहरणं विरलमेव, तयोरुपजातिस्तु कवीनामतीव हृद्येति प्रतीयते, नास्ति किमपि महाकाव्यं यत्र नैषा दृष्टा भवेत्।

कुमारसम्भवस्य प्रथमसर्गे, रघुवंशस्य द्वितीयसर्गे, शिशुपालबध-नैषधचरितयोस्तृतीये इन्द्रवज्रोपेन्द्रवज्रयोरुपजातिवृत्तमेवमन्यत्र स्वयमूह्यम्।

भ्रमरविलसिता (तम्)।

म, भ, न, गगाः ऽ ऽ ऽ, ऽ । ।, । । ।, ऽ, ऽ, चतुर्थेऽन्त्ये च यतिः। प्रीतैर्यूनां व्यवहिततपना। शिशु। ४। ६२।

शालिनी—

यत् सावित्रैर्दीपितं भूमिपालैः। उत्तर चरितम्।

दोधकम्—इत्थ ममुं विलपन्तममुञ्चत्। दीनदयालुतयाऽवनि-पालः। नैष ११।४७।

स्वागता-वृत्तमिदं शिशुपालबधस्य दशमे, किरातार्ज्जुनीयस्य नवमे, नैषधचरितस्य पञ्चमैकविंशयोर्व्यवहृतम्। अन्यत्रापि स्वय-मूह्यम्।

रथोद्धता। इदमपि वृत्तं कविभिर्बहुशः प्रयुक्तं। कुमार सम्भ-वस्य अष्टमे, रघुवंशस्य दशमैकादशयोः, नैषधचरितस्याष्टादशे, शिशुपालबधस्य चतुर्दशे, किरातर्ज्जुनीयस्य त्रयोदशोत्तरार्द्धे एत-देववृत्तमन्यत्र स्वयमूह्यम्।

द्वादशाक्षरावृत्तिः ।

तोटकम्—स तथेति विनेतुरुदारमतेः प्रतिगृह्य वचोविससर्ज मुनिम् ॥ रघु । ८ । ९३

वैश्वदेवी—

पद्मवराकीर्णं, भास्करं, बालचन्द्रं, वापी विस्तीर्णं स्वस्तिकं पूर्णकुम्भं ॥ म्लेच्छ ॥ इष्टं कृत्वार्थं पत्रिणः शार्ङ्गपाणिः ॥ शिशु । १९ । ११९

मन्दाकिनी, प्रमुदितवदना, चञ्चलाचिका, गौरी वा प्रभा । न, न, र, राः । । ।, । । ।, ऽ । ऽ, ऽ । ऽ, अन्त्ये यतिः ।

अतिसुरभि रभाजि पुष्पश्रियाम् । शिशु । ५ । ५७

व्रजति शुचिपदं त्वयि प्रीतिमान् । किरा । ६ । २७ ।

जलोद्धतगतिः—ज, स, ज, साः—। ऽ ।, । । ऽ, । ऽ ।, ।।ऽ, षष्ठे अन्त्ये च यतिः ।

समीरशिशिरः शिरःसु वसताम् । शिशु । ४।५४ ।

सनाकवनितं नितम्बरुचिरम् । किरा । ५ । २७ ।

प्रमिताक्षरा-वृत्तमिदं शिशुपालवधस्य नवमे, किरातार्जुनीयस्य षष्ठे व्यवहृतम् । अन्यत्र स्वयमूह्यम् ।

अपराह्ण शीतलतरेण शनैः । शिशु । ९ । ४ ।

सुकुमारमेकमनुकर्मभिदां । किरा । ६ । ४०

द्रुतविलम्बितम्—वृत्तमिदमनुद्धते वाच्ये (Light description) शृङ्गारादौ व्यवह्रियते । शिशुपालवधस्य षष्ठः, नैषधचरितस्य चतुर्थः, रघुवंशस्य नवमः, किरातार्जुनीयस्य चाष्टादशः सर्गः अनेन ग्रथितः उह्यमन्यत्र ।

वंशस्थवृत्तं ।—

अनेन हि शिशुपालवधस्य प्रथमः, किरातार्जुनीयस्य प्रथमश्चतुर्थः, अष्टमः, चतुर्दशश्च, नैषधचरितस्य प्रथमोद्वादशश्च, रघुवंशस्य तृतीयः, कुमारसम्भवस्य पञ्चमश्च सर्गः रचितः । इन्द्रवज्रोपेन्द्र-

वज्रयोरिव वंशस्थेन्द्र-वंशयोरप्युपजातिर्भवति। तया च शिशु-पालवधस्याष्टादशः सर्गोरचितः। अन्यत्राप्यूह्यम्।

जलधरमाला। मभसमाः SSS, SII, IIS, SSS, अन्त्ये यतिः। दिवास्त्रीणां सचरणलाक्षारागाः। रागायते निपतितपुष्पापीड़ा। किरा। ५। १६।

भुजङ्गप्रयातं-धनैर्दुष्कुलीनाः कुलीनाः क्रियन्ते। उद्भट।

त्रयोदशाक्षरावृत्तिः।

कुटजा, नन्दिनी वा।

स ज स स गाः। I S, I S I, I I S, IIS, S, षष्ठे अन्त्ये च यतिः। कुटजानि वीक्ष्य शिखिभिः शिखरीन्द्रम्। शिशु। ५। ७३।

कुटिलगतिः, क्षमा वा।

न, न, त, त, गाः III, III, S S I, SS I, S, सप्तमे त्रयोदशेच यतिः।

इह दुरधिगमैः किञ्चिदेवागमैः सततमसुतरं वर्णयन्त्यन्तरम्। किरा। ५। ८

मत्तमयूरवृत्तम्। म, त, य, साः SSS, SSI, ISS, IIS, चतुर्थे त्रयोदशे च यतिः।

दृष्ट्वा दृश्यान्यावरणीयानि विधाय। किरा।१८। २८॥ त्रातातेति क्रन्दितमाकर्ण्य विषण्णः। (रघु ९। ७५।

कनकप्रभा वा मञ्जुभाषिणी।

स, ज, स, रगाः IIS, ISI, IIS, SIS, S, समयः स वर्त्तत इवैष यत्र मां समनन्दयत् सुमुखि गौतमार्पितः। उत्तरचरितम्।

यदि शस्त्र मुज्झित मशस्त्रपाणयः। वेणीसंहारं।

प्रहर्षिणीवृत्तमिदं-ओजोगुणव्यञ्जकवाक्येषु व्यवह्रियते त्वं ब्रह्मा पशुपतिरर्यमा विधाता।

रुचिरा-ज भ स ज गाः ISI, SII, IIS, ISI, S चतुर्थे त्रयोदशे च

यतिः। अनेन शिशुपालवधस्य सप्तदशसर्गोरचितः। अथोच्चलत् कलकल घोषभीषणम्।

चतुर्दशाक्षरावृत्तिः।

वसन्ततिलकं-अनेन वृत्तेन चौरपञ्चाशिका, शिशुपालवधस्य पञ्चमः सर्गः, नैषधचरितस्यैकादशत्रयोदशौ, कुमारसम्भवस्य सप्तदशः ऋतुसंहारस्य तृतीयः सर्गः रचितः।

पथ्या-स, ज, स, य, लगाः ॥ऽ, ।ऽ।, ॥ऽ, ।ऽऽ, ।, ऽ अन्त्ये यतिः-स्थगयन्त्यमूः शमितचातकार्त्तस्वराः जलदास्तड़ित्तुलितकान्त-कार्त्तस्वराः॥ शिशु। ४। २४।

कुटिला-म, भ, न, य, गगाः-ऽऽऽ, ऽ॥, ॥।, ।ऽऽ, ऽ, ऽ, दशमे अन्त्ये च यतिः। नीतोच्छ्रायं मुहुरशिशिररश्मेरुस्रैः आनीलाभैर्विरचितपरभागारत्नैः॥ किरा। ५। ३१।

पञ्चदशाक्षरावृत्तिः।

मालिनी। वृत्तमिदं सहृदयानन्दसम्बर्द्धनं अनेन हि शिशुपाल बधस्यैकादशः सर्गोरचितः। इदञ्चान्यत्रापि प्रायः सर्गावसाने व्यवहृतमस्ति। उदाहरणन्तु स्वयमूह्यम्।

पञ्चचामरं-ज, र, ज, र, ज, गाः, ।ऽ।, ऽ।ऽ, ।ऽ।, ऽ।ऽ, ।ऽ।, ऽ, अष्टमे अन्त्ये च यतिः। जटाकटाह संभ्रमभ्रमन्निलिम्पनिर्झरी विलोल-वीचिवल्लरी विराजमानमूर्द्धनि। इदं वृत्तं स्तोत्रादौ बहुशोवा-वर्क्ष्यते।

सप्तदशाक्षरावृत्तिः।

हरिणी – प्रतनुविरलैः प्रान्तोन्मीलन्मनोहरकुन्तलैः दशनमुकुलैर्मुग्धालोकं शिशुर्दधतीमुखम्। उत्तर चरितम्।

शिखरिणी-हंसदूतानन्दलहरी प्रभृतयो ग्रन्था वृत्तेनानेन रचिताः। वृत्तमिदं हृदयस्य स्फुरणं द्रवीभावं वा द्योतयति। इयं गेहे लक्ष्मीरिय

मसृतवर्त्तिर्नयनयोरसावस्याः स्पर्शोवपुषि बहलश्चन्दनरसः। उत्तर चरितम्।

पृथ्वी। वृत्तमिदं भावगाम्भीर्य्यं द्योतयति।

प्रचण्डपरि पिण्डितः स्तिमित वृत्तिरन्तर्मुख। किरातार्ज्जुनीयम्।

मन्दाक्रान्ता—मेघदूत, पदाङ्कदूतोद्धवदूत प्रभृतयोग्रन्था वृत्ते नानेनैरचिताः।

तीर्थे तोयव्यतिकरभवे जह्नुकन्या सरय्वोः। रघु। ८।

वंशपत्रपतितं (ता), भ, र, न, भ, न, ल, गाः ऽ।।, ऽ।ऽ, ।।।, ऽ।।, ।।, ।, ऽ, दशमे, सप्तदशे च यतिः।

दर्पणनिर्म्मलासु पतिते घनतिमिरमुषि ज्योतिषि रौप्यभित्तिषु पुरः प्रतिफलितमुहुः॥ शिशु ४।५७

सम्प्रतिलब्धजन्मशनकैः कथमपि लघुनि क्षीणे पयस्युपेयुषि-भिदां जलधरपटले॥ किरा। ५। ४३।

अतिशयिनी-स, स, ज, भ, ज, ग, साः, एकादशे, अन्त्ये च यतिः। इति धौतपुरन्ध्रिमत्सरान् सरसि मज्जनेन श्रियमाप्तवतोऽतिशायिनी मपमलाङ्गभासः। शिशु। ८। ७१।

अष्टादशाक्षरावृत्तिः।

मञ्जुमालिनी, मञ्जुमालिका, तारका, नाराचकं वा न, न, र, र, र, राः, ।।।, ।।।, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ।ऽ, दशमे अन्त्ये च यतिः।

कृत सकल जगद्विरोधोऽवधूतान्धकारोदयः॥ शिशु। ११।६७।

रघुपतिरपि जातवेदोविशुद्धां प्रगृह्य प्रियाम्। रघु। १२।१०४।

ऊनविंशत्यक्षरावृत्तिः।

शार्दूलविक्रीडितम् वृत्तमिदमुद्धतवाच्ये (Grand description) उपयोगमर्हति। उत्तरचरितादावस्य भूयान् व्यवहारो दृश्यते। तथा च चञ्चत्पञ्चशिखण्डमण्डनमसौ मुग्धः प्रगण्डः शिशुः॥ वीरचरितम् उदाहरणा न्तराण्यूह्यानि।

मेघविस्फूर्जिता-य, म, न, स, र, र, गाः ।ऽऽ, ऽऽऽ, ।।।, ।।ऽ, ऽ।ऽ, ऽ।ऽ, ऽ, षष्ठे, द्वादशे, ऊनविंशे च यतिः

श्रिया जुष्टं दिव्यैः सुपटहरवैरन्वितं पुष्पवर्षैः। शिशु। २०।७८।

सुमधुरा-म, र, भ, न, म, न, गाः ऽऽऽ, ऽ।ऽ, ऽ।।, ।।।, ऽऽऽ, ।।।, ऽ, सप्तमे, त्रयोदशे, अन्त्ये च यतिः।

वेदार्थान् प्राकृतस्त्वं वदसि न च ते जिह्वा निपतिता॥

मृच्छकटिकम्

विंशत्यक्षरावृत्तिः।

सुवदना-म, र, भ, य, य, भ, ल, गाः ऽऽऽ, ऽ।ऽ, ऽ।।, ।ऽऽ, ।ऽऽ, ऽ।।, ।, ऽ, सप्तमे, अष्टमे, अन्त्ये च यतिः।

उत्तुङ्गास्तुङ्गकूलं स्रुतमदसलिलाः प्रस्यन्दिसलिलम्। मुद्राराक्षसम्।

एकविंशत्यक्षरावृत्तिः।

स्रग्धरा-वृत्तमिदं समुद्धते वाच्ये रौद्रे वीरे, भयानके च रसे सम्यगुपयोगमर्हति। यथा उत्कृत्योत्कृत्य गर्भानपि श-कलयतःक्षत्र सन्तानरोषादित्यादि। उदाहरणान्यूह्यानि।

अर्द्धसमवृत्तानि।

वियोगिनो (सुन्दरी)-वृत्तमिदं करुणरसे सम्यगुपयोगमर्हति। कुमारसम्भवस्य चतुर्थः, रघुवंशस्याष्टमः, शिशुपालवधस्य षोढशः, किरातार्ज्जुनीयस्य द्वितीयश्च सर्गोऽनेन रचितः।

औपच्छन्दसकं प्रथम तृतीययोः स, स, ज, ग, गाः ।।ऽ, ।।ऽ, ।ऽ।, ऽ, ऽ, द्वितीय चतुर्थयोः स, भ, र, याः ।।ऽ, ऽ।।, ऽ।ऽ, ।ऽऽ, वृत्तमिदं वीररसे उपयोगमर्हति-चमरान् परितः प्रवर्त्तिताश्वः क्वचिदाकर्ण निकृष्ट भल्लवर्षी। नृपतीनिवतान् वियोज्य सद्यः सितवालव्यजनैर्जगाम शान्तिम्॥ र।८।६६।

तिमिरं निर्ज्जितवत्यथप्रकाशे। शिशु। २०।४१।

मालभारिणी-प्रथमतृतीययाः स, स, ज ग, गाः, ॥ऽ ॥ऽ, ।ऽ।, ऽ,ऽ, द्वितीय, चतुर्थयोः स, भ, र, याः ॥ऽ, ऽ॥, ऽ।ऽ, ।ऽऽ,

इयमस्मदुपाश्रयैकचित्ता मनसा प्रेमनिबद्धमत्स्मरेण ।
नियतं कुपितातिवल्लभत्वात् स्वयमुत्प्रेक्ष्य ममापराधलेशम् ॥

वेणीसंहारम्

गाथाः--गाथाछन्दसां न किमपि लक्षणं विद्यते उदाहरणतो लक्षणानि ज्ञेयानि। अमी वेदिं परितः क्लृप्तधिष्ण्याः समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः । अपघ्नन्तो दुरितं हव्यगन्धैर्वैतानास्त्वां वह्नयः पावयन्तु ॥ गाथाच्छन्दसां महाभारते पुराणेषु च भूयान् व्यवहारो दृश्यते । इति

समाप्तोऽयं ग्रन्थः ।

ग्रन्थस्यास्य प्रथम संस्करणं १९३९ वैक्रमाब्दे जातम् ।

---